पसानं प्रागद्वारं यशस्कामो बलकामः कुर्वीत १५ ) तस्मिन्नेवं गुणविशिष्टस्थाने अवसाने गृहं । अयमवसानशब्दो गृहवचनः । कुतः पुनरवसानग्रहणात् । अनुद्वारंच गृहद्वार मिति एव शब्दश्रुतेश्च । प्रागद्वारं-प्राङ्मुखद्वारं यशस्कामोबलकामः कुर्वीत । कामशब्दाभ्यासादन्यतर कामो नोभयकामः । यद्युभयमभिप्रेतंस्या तथामतियशोबल काम इत्यपठ्यत् । तस्माद्यशस्कामोबलकामोवेतिद्रष्टव्यम् । ( उदग्द्वारंपुत्रपशुकामः १६ ) अवसानंकुर्वीतेतिवर्त्तते । ( दक्षिणा द्वार इ० सर्वकामः १७ ) दक्षिणाद्वारे वास्तुनियत्कामयते तत्तद्भवतीतिदर्शयति । ( नप्राग्द्वारंकुर्वीत ॥१८॥ अनुद्वारंच ॥१९॥ गृहद्वारम् ॥२०॥ नकुर्वीतेतिवर्त्तते, अनुपश्चाद्द्वारं अनुद्वारम् । तादृशंगृहद्वारं नकुर्वीतेति । द्विद्वार मित्यर्थः । अथवा द्वारमनुद्वारंनकुर्वीत । कथंनाम, अन्यमुखद्वाराभिमुखं गृहद्वारंनकुर्वीतेत्यर्थः । उक्तंचवास्तुशास्त्रे—द्वारगवाक्षस्तम्भैः कर्दमभित्यन्तकोणवेधैश्च । नेष्टंवास्तुद्वारं विद्धमनाकोतमार्येच । गृहद्वारंनकुर्वीतेत्यर्थः ॥ ( यथानसंलोकीस्यात् ॥२१॥ ) यथायेन प्रकारेणायं वास्तुनि सन्ध्योपासन होमार्चनभोजनादि क्रियाप्रवृत्तोबहिर्वर्त्तिनां चाण्डालपतितादीनां संलोकी, आलोकन गम्योनस्यात्तथा ,। खातेनिसृत वस्तुमाह वास्तुशास्त्रे—खातेयदिश्मालभते हिरण्यंतथेष्टकायस्य समृद्धिरत्र । द्रव्यंच रम्याणिसुखानिधत्ते, ताम्रादिधातुर्यदि तत्रवृद्धिः । पिपीलिका दर्दुरिकाहचेत्सा द्वसंमतस्त्राखिल कार्यहानि. । तुषास्थिचोराणि तथैवभस्माथण्डानिमर्पामरणप्रदास्युः ॥ वराटिका दुःखदरिद्र दात्री कार्पासएवातिददातिरोगम् । काष्ठप्रदग्धंददिरोगवृद्धि कलिर्भवेत्खर्परकेननित्यम् लोहेन कर्त्तुर्मरणंप्रदिष्टंविचार्य वास्तुंप्रवदन्तितज्ज्ञा । दिक्साधनंसिद्धान्तरहस्ये—वृत्तेसमभूगतेतु केन्द्रः स्थितिशंकोः क्रमशोविशतयपेति । छायाग्रमिहाचपूर्वा ताभ्यांसिध्यतिमेरदिक्च्चयाभ्या । भूमिसुसमाह—प्रद्योतनारपञ्चनगाङ्कसूर्य नवेन्दुपङ्विविंशति तेपुभेपु । शेतेमहीनैवगृहंविधेयं तडागवापी खननंनशस्तं । अथ गृह निर्माणेवेध-पद्धलमाह—प्रणम्यपार्वतीपुत्रंध्यात्वा नारायणंगुरुम् । लोकानामुपकाराय क्रियतेवेधसंग्रहः ॥१॥ शिवउवाच—वेधेस्तयोक्षयंयान्ति देवमानुषराक्षसाः । वेधेनहन्यतेनित्यं नास्तिवेधसमोरिपुः ॥२॥ वेधनकलहंनित्यं वेधनचकुलक्षयः वेधेन ह्रियतेसर्वं तस्माद्वेधंनिरीक्षयेत् ॥३॥ विष्णुपृष्टेशिवोदृष्टौ चण्डिकायत्रदक्षिणे । तत्रवेधं विजानीयाद् गर्गस्यवचनंयथा ॥४॥ कोण १ दक् २ छिद्र ३ छायाश्च ४ ऋजु ५ वंशा ६ स्त ७ भूमयः ८ संघात ९ दन्तको १० । चेतिवेधास्तुदशधास्मृताः । ५। कोणवेधेभवेन्मृत्यु दृष्टिवेधेतुधनक्षयः । पशुहानिर्भवेच्छिद्रे छायावेधेचराक्षसाः ।६। ऋजुवेधेमहान्नाशो वन्शनाशस्तु वन्शजे । अस्तजेपशुहानिःस्याद्भिभूमौचधनक्षयः ।७। संघातेनिधनंशीघ्रं दन्तवेशोकमादिशेत् । कोणादिकोणपर्यन्तं प्रमाणंकोणवेधजम् ।८। कोणाच्चनिधनंशीघ्रं गृहेदोषंनिरर्थकम् । तथानीच

भागेतु वय ई० मामस्मत अर्धशभागे चेशान तमीशानेति मंत्रत । अस्मरेति ब्रह्माणं मध्येशान पूर्वयो । इन्द्राग्नीपूर्व्यो त्यनन्तञ्च मध्यपश्चिम निर्ऋतौ । वास्तु भद्र पूजादि प्रमाणमाह शौनकः —शिरादि पंच तत्व रिश देवाहतन प्रजगेत । वेदमंत्रनामभने प्रणव-व्याहृति भिरस्तथा । होमश्चि मंत्रलिङ्गयां । कुण्डहस्त प्रमाणतः । यवेक्षाणतिल स्तद्वु समिद्धि-श्चोरुजाः । पलाशैः खादिरापामार्गा उम्बर संभवैः । कुशदूर्वा मयेनापि मधुनापि समा न्वितं तर्यस्तु पंचभिर्विंश विंशतीज स्थापिता नामान्ते भवेत् गोऽध्येय दारुणश वल्करा । नमस्कारान्तु युक्तेन प्रणवेन मयेन । तत्रान्ते निहार्तं स्विष्ट कृद्धोम मेरच । पूर्णाहुति न जुहुयात्संख्यप प्रागमे तत्र शेष प्रयोग वदयामि ।

इति गृहवास्तु परिभाषा ।

# गृहादि सूत्रारम्भ विधिः ॥

अथ सूत्रारम्भ विधानं वक्ष्ये शुभे ज्योतिः शास्त्रोक्त सूत्रा-रम्भ मुहूर्त्ते पुण्येऽहनि नूतन गृहं कर्त्तुमुत्सुको गृहान्मङ्गल ध्वनि वादित्रादिपुरः सरं कृतस्नानः सुवासाः साचार्यः शान्तिपाठादि मङ्गलसूक्तानि पठित्वा पूर्वोक्त कथनानुकूल परीक्षितं चतुरस्रगृह निर्माणस्थानमागत्य पञ्चगव्येनाभिषेक विधानेन कुशपिञ्जुलिना वा दूर्वाभिस्तद्भूमिमभिषिंच्यैशान कोणैकदेशे गोमयेनोपलिप्य दीपं प्रज्वाल्य सम्पूज्य च भूतोत्सादनादिकं विधाय गणेशादि पञ्चांग पूजनं कृत्वा-ईशानकोणे धान्यपुञ्जोपरि बृहत्कलशं वरुण विधिना सम्पूज्य शमीवट बिल्वाद्यन्यतमवृक्ष सम्भूतान् व्रणादि रहितान्यथोक्त लक्षणान् चतुरः शंकून् कौशेय कार्पास शणनि-र्मितं मध्यग्रन्थिरहित मर्धाङ्गुल विशाल सूत्रं तत्र सामयिकान्य-न्यानि वस्तून्यपि च तत्कलशपार्श्वे संस्थाप्यवक्ष्यमाण मन्त्रेण विश्वकर्माण मावाहयेत् ॥ ॐ विश्वकर्मन्निति मन्त्रस्य शासनापित्रि-ष्टुप्छन्दः विश्वकर्मा देवता विश्वकर्मा वाहने विनियोगः । ॐ

विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रम कृणोरवध्यम्। तस्मै विशः समनमन्तपूर्वीरयमुग्रो विहव्यो यथा ऽसत इति पंचोपचारादिभिर्विश्वकर्माणं सम्पूज्य ॐ विश्वकर्मणे नमः सम्प्रार्थ्य ईशान शंकुम्। ॐ तमीशान मित्यस्य गौतम ऋषिर्जगतीछन्द ईशानो देवता ईशान कोण शंकु पूजने विनियोगः॥ ऋक्॥ ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्व मवसे हूमहेवयम्॥ पूषानो यथा वेदसामसद्वृधे। रक्षिता पायुरदब्धः स्वस्तये॥ ॐ ईशानाय नमः सम्पूज्य प्रथक् स्थापयेत्—तत आग्नेय शंकुम्॥ ॐ अग्नेनयेत्यस्यागस्त्य ऋषि स्त्रिष्टुप्छन्दो ऽग्निर्देवता आग्नेय कोण शंकु पूजने विनियोगः—ऋक्—ॐ अग्नेनय सुपथारायेऽअस्मान विश्वानिदेव वयुनानि विद्वान्॥ युयोध्यस्म ज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेम ॐ अग्नये नमः सम्पूज्य प्रथक्स्थापयेत॥ ततो नैर्ऋत्यशंकुम॥ ॐ एषते इत्यस्य वरुण ऋषि रनुष्टुप्छन्दः निर्ऋतिर्देवता निर्ऋतिकोण शंकुपूजने विनि०॥ ऋक्—ॐ एषते निर्ऋते भागस्तंजुषस्व स्वाहा ॐ निर्ऋतयेनमः सम्पूज्य च प्र०॥ ततो वायव्य शंकुम्॥ ॐ वातोवेत्यस्य बृहस्पति ऋषि स्त्रिष्टुप्छन्दो वायुर्देवता वायुकोण शंकु पूजने वि०॥ ॐ वातोवामनोवा गन्धर्वा सप्त वि दे० शतिः॥ ते ऽअग्रे श्वमयुजंस्ते ऽअस्मिञ्जवमादधुः॥ ॐ वायवेनमः सम्पूज्य प्रथक् स्थापयेत्। ततः प्रधान शिल्पिनमाहूय तं सम्बोध्यात्र त्वं मम गृह निर्माण कर्मणि प्रधान शिल्पी भवितुमर्हसि॥ अस्मीति प्रत्युक्तिः॥ त्वं भव भवानीति शिल्पी ब्रूयात॥ शिल्पिनं पारितोषिकं यथाशक्त्या द्रव्य परिधेय वस्त्रादिकं दत्वा तत्र शोधितायां भूमौ चतुरस्रे मण्डले शिल्पी अन्यत्तुपसूत्रं गृहीत्वा गृहभूमेश्चतुरायत यथोक्त रीत्यानिरीक्ष्य चतुर्षु कोणेषु उपशंकून् स्थापयित्वा शंकुंसूत्रेण द्विर्वेष्टयित्वा प्रादक्षिण्यादाग्नेयादि क्रमेण ईशान शंकूपरि दृढीकृत्येशानान्नैर्ऋत्य शंकुंयावत् कर्णसूत्रं पातयेत।

तद्वदाग्नेयाद्वायव्य शंकूपरिकर्णसूत्रंपातयेत् । येन प्रकारेण द्वयोः सूत्रयोर्दैर्घ्यैक्यता भवेत् । एवं विधिना त्रिकोण रहितं कुर्यात्॥ ततो ज्योतिः शास्त्रोक्त मुहूर्ते पद्धानुसारेणानुक्त स्थानस्थ ग्रहाणांदानानि कृत्वा सूत्रपातं कुर्यात् । अत्र सूत्रपातविधिं केचिदाचार्या आग्नेयकोणतो वदन्ति ॥ अपरेईशानतः ॥ अत्रोदेश प्रथानुसारात् पूर्वं पूजित प्रथमशंकोरुपरि सूत्रं दृढीकृत्य शंकोरग्रं तीक्ष्णमुखं घृतदुग्धादिभिर्विलिप्याचार्यो लोहमुष्टिं ( हतोड़ीं ) गृहीत्वा तत्र स्तम्भ निर्माणार्थ गर्त विधाय पूर्व शंकधिष्ठित भूम्यामचर्क्र दृढं पूजितमीशान शंकुं धृत्वा मन्त्रमुच्चरेत ॥ ॐ विशन्तु भूतले नागा लोकपालाश्च सर्वतः । अस्मिन् स्थानेतु तिष्ठन्तु आयुर्बल कराः सदा ॥ इति मन्त्रं पठन् शंकुं लोहमुष्टिना अष्टवारं ताड़येत् ॥ ॐ भद्रं कर्णेभिः शृणुयामदेवाः भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाँसस्तनूभिर्व्यसे महिदेवहितं यदायुः ॥ शंकोर्भेदे भंगेचानिष्टफलम् ॥ पूर्वोत्तरेशानेषु शंकु शिरस्निरश्चीनंचेच्छुभम् अन्यथाशुभम् ॥ ईशान स्थूणस्तम्भमपि सान्निध्ये दृढीकृत्य ॐ ब्रह्मणे नमः— इति मन्त्रेण पाद्यादिभिः सम्पूज्य बलिं दद्यात् ॥ माप भक्तबलिं सम्पूज्य ॐ रुद्रेभ्यश्चैव सर्पेभ्यो येचान्येतत्समाश्रिताः । बलिंतेभ्यः प्रयच्छामि गृह्णन्तुसततोत्सुकाः स्वाहा, एवं सर्वत्र तत आग्नेये ॐ विशन्तुभूतलेनागा लोकपालाश्चसर्वतः । अस्मिनस्थानेतुतिष्ठन्तु आयुर्बलकराः सदा । अनेनमंत्रेण मुष्टिनरं शंकुंकीलयेत् । स्थूणस्तम्भं । ॐ विष्णवेनमः पाद्यादिभिः सम्पूज्याग्नेयशंकुं सूत्रेण प्रदक्षिणक्रमेण द्विर्द्विर्वेष्टयित्वा बलिंदापयेत् । बलिंसंपूज्य ॐ अग्निभ्योऽप्यथसर्पेभ्यो येचान्ये तत्समाश्रिताः । बलिंतेभ्यः प्रयच्छामिपुष्पमोदन मुत्तमम् स्वाहा । ततोनैर्ऋत्ये । नैर्ऋत्य शंकुंसूत्रेण द्विर्वेष्टयित्वा । ॐ विशन्तुभूतलेनागा लोकपालाश्चसर्वतः । अस्मिन् स्थानेतु तिष्ठन्तु आयुर्बलकराः सदा ।

इति शंकुं पूर्ववत्कीलयेत् । स्तम्भम् ॥ ॐ महेश्वरायनमः पाद्या-
दिभिः सम्पूज्य बलिंच । ॐ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां
येचराक्षसाः । बलिंतेभ्यः प्रयच्छामि सर्वं गृह्णन्तु साम्प्रतं स्वाहा ।
वायव्यकोणशंकुं द्विवेष्टयित्वा—ॐ विशन्तुभूतलेनागा लोकपाला
श्चसर्वतः । अस्मिन् स्थानेतु तिष्ठन्तुआयुर्बलकराः सदा । पूर्वव-
त्कीलयेत् ॐ इन्द्रायनमः स्तम्भं सम्पूज्य बलिंच । ॐ वायव्य
वासिनोयेच येचान्येतत्समाश्रिताः । तेभ्योबलिं प्रयच्छामि गृह्णन्तु
पुण्यमोदनम् स्वाहा । इति चतुष्कोणेषु शंकुकीलनादनन्तरं ततः
ईशानकोणस्थ शंकोस्तत्सूत्रंद्दढी कुर्यात् । तत आचम्य ( अत्रके-
चिदाचार्या ग्रहयाग पूर्वकवास्तुयागंच तन्मध्यभूमौ वास्तु
वेदीमेकाशीति पदां निर्माय वास्तुमण्ड पूजा पद्धत्यनुसारेण
पूजाबलि होमादिकमपि प्रवदन्ति ॥ उक्तं च शब्द कल्पद्रुमे,
मात्स्ये सूत्रपातादौ ॥ सूत्रपाते तथा कार्यं तथा स्तम्भोदयेपुनः ।
द्वारवन्धोच्छ्रये तद्वत्प्रवेश समये तथा ॥ वास्तूपशमने तद्वद्वास्तु
यज्ञस्तु पञ्चधा ॥ इति प्रमाणवचनैः सूत्रपाता दारभ्यो गृहप्रवेशा-
न्तोक्त समयानुकूलो वास्तु यज्ञः पञ्चधा भवतीति ) क्षेत्रमध्ये ऽ
अष्टदलं कमलं लिखित्वा तत्र पृथ्वीं पूजयेत् ॥ ध्यानम्—
सुरूपां प्रमदारूपां सर्व लोक धरामहीम् । ध्यायामिमनसा देवीं
दिव्या भरण भूषिताम् ॥ ॐ स्योना पृथ्वीति मेधातिथिर्ऋषि-
र्गायत्री छन्दः पृथ्वी देवता पृथ्व्यावाहने पूजने विनियोगः ॥
ऋक् ॐ स्योना पृथिवीनो भवा नृक्षरा निवेशनी । यच्छानः
शर्म्म सप्रथाः ॥ ॐ भूर्भुवः स्वः भो पृथ्वीहागच्छेहतिष्ठ सुप्र-
तिष्ठिता वरदाभव ॥ ॐ पृथिव्यैनमः ॥ इति पाद्यगन्धादिभिः
सम्पूज्य प्रार्थयेत ॥ पृथिव त्वं सर्वलोकानामाश्रयायार्चितासुरैः ।
अतोमेगृह निर्माण चमंस्थानं प्रकल्पय ॥ तत्रैव मध्यपदे वास्तु
पुरुषं ध्यायेत् ॥ ध्यानम ॥ ॐ एह्येहि भगवन वास्तो गृहेश सर्व
सौख्यद । पूजां गृहाण देवेश सर्वसम्पत्करोभव ॥ ॐ वास्तो-
ष्पत इति वशिष्ट ऋषिस्त्रिष्टुप्छन्दो वास्तुर्देवता वास्त्वावाहने

विनियोगः । ऋक्ः ॐ वास्तोष्पते प्रतिजानिह्यस्मान्त्स्वावेशो ऽ अनमीवोभवानः । यत्त्वेमहे प्रतितन्नोजुषस्वशन्नो भवद्विपदेशं चतुष्पदे । ॐ वास्तु पुरुषायनमः ॥ पाद्यादिभिः सम्पूज्य प्रार्थयेत्—वास्तो स्वामिन् शक्तिरूप सर्व सौभाग्यसंयुत । गृहं रक्ष ममाभिष्टंप्रसाधय मुदाप्रभो । ततः ईशानमागत्य बृहत्कलश मादयाचार्यः स्वस्तिवाचन पूर्वककलशजलेनेशानादि प्रादक्षिण्येन सूत्रमार्गेणधारांदत्वा ईशान एव पुनस्तं कलशंयत्किंचिज्जल सहितं संस्थाप्य तेनैव क्रमेण यवान् वापयेत् ॥ तत स्तस्मिन्नेव सल्लग्ने आचार्यः ( अत्रखातंशिलान्यासमपि आग्नेयतो वदन्ति- केचित् । देशप्रथानुकूलं कुर्यात् ) शान्तिसूक्तादिपुरः सरशिल्पिना सहघृतमधुमुखेन कुद्दालेन उदङ्मुखेनभित्तिनिर्माणार्थशिलास्थानं खातयेत्— ततोमृदंनवेनवेणव पिटकेन नैर्ऋत्यां प्रक्षिपेत् । एवं चतुर्षु कोणेषु खातंकृत्वेशान्यांदिशि तत्खातगर्त्तेयवगन्धपंच- रत्न सुवर्ण रजतादि मुद्रां स्वनामांकिते स्वर्णपत्रेतद्दिनस्यसूर्याश संवत्सरगणानांकादिकंसुलेख्य शिलाधः स्थापयेत् । उपरित उत्तर पूर्वाभिमुखेनाचार्यः—ईशानशिलांनन्दानाम्नीमुत्थाप्य ॐ स्थिरो भववीड्वंग ऽ आशुर्भवत्वाज्यर्वन् । पृथुर्भवसुखदस्त्वम, अग्नेः पुरीषवाहणः इति ईशाने स्थापयेत् । ॐ नन्दायैनमः । गन्धादिभिः संपूजयेत् तत आग्नेये खनितगर्ते पूर्वदन्यस्याग्ने- यशिलां भद्रानाम्नीमुत्थाप्य ॐ भद्रंकर्णेभिः शृणुयामदेवाः भद्रंपश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवा ॐ सस्तनूभिर्व्यसे- महिदेवहितंयदायुः । ॐ भद्रायैनमः सम्पूज्य ततो निर्ऋतिकोणे जयानाम्नी शिलामुत्थाप्य ॐ स्थिरोभववीड्वङ्ग ऽ आशुर्भवत्वा- ज्यर्वन् । पृथुर्भवसुखद स्त्वमग्नेः पुरीषवाहणः इति संस्थाप्य ॐ जयायैनमः इति सम्पूज्य । ततो वायव्य कोणेरिक्तानाम्नीं शिलामुत्थाप्य ॐ त्र्यम्बकं यजामहे सुगन्धिंपुष्टि वर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॐ रिक्तायैनमः संस्थाप्य सम्पूज्यच तत आचार्यः शान्तिकलशोदकेन शिलाभ-

मिंच संप्रोक्ष्यकुद्दालादिकमपि जले आप्लाव्यगन्धादिना पूजयेत्
ततो सपत्नीकंयजमानं अभिषेक मंत्रैरापिंच्य ॐ भद्रमस्तु
शिवंचास्तु महालक्ष्मीः प्रसीदतु । रक्षन्तुत्वां सुराः सर्वसम्पदः
सुस्थिराभव ॥ इति देवोपभुक्त निर्माल्यंदत्वा आचार्यादीन् ।
शिल्पकारादींश्च दक्षिणाभिः पारितोपिकादिना तोषयेत् ।

इति सूत्रारम्भ विधिः ।

## गृहवास्तुभद्रम्



# अथ वास्तुयाग पद्धतिः ।

तत्रादौ, नूतन गृहनिर्माणनिर्विनिरूपिते शुभे मुहूर्ते आचा-र्योक्त्यनुसारेण शिल्पकार द्वारा पञ्चशिलाः पूर्वोक्त विधिना यथा ब्राह्मण एक विंशत्यंगुल दीर्घाः। क्षत्रिः सप्तदशांगुलदीर्घाः। वैश्यस्त्रयोदशांगुल दीर्घाः । शूद्रे नवांगुल दीर्घाः । दैर्घ्यार्द्ध विशालाः । विशालतार्द्ध प्रमाणोन्नताः समाः मनोहरा घाट-येत ॥ तासु क्रमशः नन्दायां पद्मम् । भद्रायाम् सिंहासनम् । जयायां तोरण छत्रे । रिक्तायां कुम्भम् । पूर्णायां चतुर्भुजं विष्णुम् । शिल्पीटंकेन लिखेत ॥ तासां शिलानां च स्थापनार्थं शिलामयाआधारशिला । वितस्तिमात्रायताअष्टांगुलोच्छ्रिताः षडां गुलायताः ॥ विंशतिशिलाः । अन्या अपिकारयेत्, यथागर्तमध्ये चतसृणामुपशिलानां मध्ये पद्मादि निधि कुम्भस्थापनार्थं प्रादेश मात्रं चतुरस्रं कुण्डं भवेत् । पद्मादिनिधि कुम्भाश्च ताम्रका मृण्मया वा वर्णादीनां क्रमेण पञ्चांगुलाश्चतुरस्राः सार्द्ध द्वयंगुलाः सपादांगुलाः पञ्चकार्याः शूद्राणामपि सपादांगुलाएव । तेषां पञ्च कुम्भानां पिधानानि च कार्याणि ॥ अथ कर्म प्रयोगः ॥ तत्र पूर्वेऽहनि कृतैकभुक्तो यजमानः सपत्नीकः प्राङ्मुखोपविश्यदीपं प्राज्वाल्याचम्य स्वस्ति वाचनं पठित्वा ॐ सुमुखेत्यादिना गणे-शाय पुष्पांजलि निवेद्य स्वेष्ट देवतां स्मृत्वा अर्घ संस्थाप्य प्राणा-याम त्रयं विधाय गौरसर्षपाक्षतैर्भूतोत्सादनं विधाय कुशतिल जलान्यादाय संकल्पं कुर्यात॥ अद्येत्यादि संकीर्त्यामुकोऽहं वास्तु शान्तिपूर्वक शिलान्यास गृह प्रवेश कर्मणि च निर्विघ्नता सिद्ध्यै आदौ श्री गणपत्यादि पंचांग देवतानां पूजन पूर्वकं नांदीश्राद्ध पुण्याहवाचनादि कर्म करिष्ये ॥ पूर्वोक्त विधानेनैतान्सम्पूज्य प्रधान सङ्कल्पं कुर्यात् ॥ अद्येत्यादि संकीर्त्यामुकोऽहं नूतनगृहे शिलान्यासपूर्वकं करिष्यमाणगृह प्रवेश कर्मणि सर्वोपद्रव शान्ति पूर्वकमायुरारोग्यैश्वर्याभिवृद्ध्यै पुत्रपौत्र धन धान्यादि द्विपद चतु-

पदादि वृद्धये श्री परमेश्वर प्रीत्यर्थं ग्रहमख सहितां सर्वतो भद्र ग्रहभद्र वास्तु भद्र पूजनयुतां वास्तु शान्ति करिष्ये— तथाचगणेशनवग्रहादि साधकाना माचार्यब्रह्मर्त्विग्सदस्यद्वारपाल कानाञ्चयथाक्रमंवरणंकरिष्ये ॥ वासांगुलीयकासन पंचपात्रधौतो तरीय वस्त्रादिसामग्रीं सम्पाद्यजलेनाभ्युक्ष्य गन्धाक्षतादिभिः सम्पूज्याचार्यब्राह्मणमाहूयार्घ्यंदत्वा गन्धादिभिः सम्पूज्याद्येत्या दि संकीर्त्यामुको ऽ हमेभिर्गन्धाक्षत यज्ञोपवीत पुष्पमाला वासो लङ्करणद्रव्यैः सवास्तुशान्तिशिलान्यासगृहप्रवेशकर्मण्याचार्यत्वेना मुक शर्माणं ब्राह्मणंवृणे । वरणंतस्मैदत्वा–वृतो ऽ स्मीत्याचार्यो ब्रूयात् । प्रार्थयेत—आचार्यस्तुयथास्वर्गे शक्रादीनांबृहस्पतिः । तथात्वं ममयज्ञे ऽ स्मिन्नाचार्योभवसुव्रत ॥ तथा गणेशमन्त्र जापकं नवग्रहमन्त्रजापकान । संहितापाठकंशात्यध्याय पाठ-कान् द्वारपालान यथाशक्तितोव्रणुयात् । ततआचार्यसहितो यज-मानः । धूपदीपादीनि सर्वोपकरणवस्तूनि ब्राह्मणैर्ग्राहयित्वावादि त्रादिमङ्गलध्वनिंपुरस्कृत्य मण्डपंप्रदक्षिणीकृत्य पश्चिमद्वारेण प्रवेशंकुर्यात् । नत्रसुलिप्तायांभूमौ मण्डपमध्यभागे यजमानहस्ता चतुर्हस्तांचतुरस्रां सर्वतोभद्रवेदिकांहस्तोच्छ्रितां वासपादहस्तां चतुरस्रां शिल्पकारद्वारा निर्माप्यतत्राधारं श्वेतवस्त्रंप्रसार्याचार्यः पूर्वोक्तप्रकारेण रेखानिर्माणं रचनादिकंचकृत्वा स्तम्भपूजोक्त विधिनाषोडश स्तम्भान सम्पूज्यमध्ये यथेष्टदेवं वेदोक्तविधिना सम्पूज्य यदिशिवशक्तिविष्ण्वादि मन्दिराणांवापीकूप तडागा-दीनां प्रतिष्ठाचेत् ॥ अष्टलिंगतोभद्रादीनां रचनयातत्तद्देवतानां स्थापनंपूजनंचकुर्यात् ॥ ततईशानेग्रहभद्रोक्तरीत्या त्रिवप्रांवेदीं निर्माप्यपद्धत्यनुसारेण पूजनंकुर्यात् ॥ तत्रआग्नेये यजमानहस्तेन हस्तमितायामविस्तारां चतुरंगुलोच्छ्रितां वास्तुवेदींनिर्माय वेद्यु-परिश्वेतवस्त्रंप्रसार्य ततोईशानादिकोण चतुष्केषु ॐ विशन्तु भूतलेनागा लोकपालश्चसर्वतः । अस्मिन्गृहेतुतिष्ठन्तु आयुर्बल-कराःसदा ॥ इतिमन्त्रेण प्रादक्षिण्येनखादिरादि कीलिकाआरो-

पयेत् ॥ तत्रैवपार्श्वे माषभक्तबलिंदद्यात् ॥ ३ॐ अग्निभ्योऽप्यथसर्पेभ्योयेचान्ये तत्समाश्रिताः । तेभ्योबलिंप्रयच्छामिपुण्यमोदनमुत्तमम् ॥ ततोवास्तुवेद्युपरिवस्त्रे स्वर्णशलाकयाऽथंगुलान्तराला समादश रेखानाम मन्त्रैः कुंकुम हरिद्रादिभिर्मन्त्र मुच्चार्य कुर्यात् । आदौ पश्चादारभ्याः प्रागन्ताः । ३ॐ शान्तायैनमः ३ॐ यशोवत्यै नमः ३ॐ कान्तायैनमः । ३ॐ ३ॐ विशालायैनमः । ३ॐ प्राणवाहिन्यैनमः । ३ॐ सत्यैनमः । ३ॐ सुमनायैनमः । ३ॐ नन्दायैनमः । ३ॐ सुभद्रायैनमः । ३ॐ सुरथायैनमः ॥१०॥ अतो दक्षिणारम्भाउदंगताः प्राक्संस्थाऽथंगुलान्तरालाः समादशरेखाः कृत्वा ३ॐ हिरण्यायैनमः ३ॐ सुव्रतायैनमः ३ॐ लक्ष्म्यैनमः । ३ॐ विभूत्यैनमः ३ॐ विमलायैनमः ३ॐ प्रियायैनमः । ३ॐ जयायैनमः ॥ ३ॐ कलायैनमः । ३ॐ विशोकायैनमः ३ॐ इडायैनमः ॥१०॥ एवं एकाशीतिपदं वास्तुमण्टलं विधाय पूर्वोक्तानुसारेण रक्तपीतादितवं वर्णयित्वा वक्ष्यमाण प्रकारेण पदेषु देवता स्थापन पूजनादिकं च कुर्यात् ततो वास्तुवेद्याः पश्चिमेवोत्तरे सयोनिमेखलं हस्तमात्रायत विस्तारंकुंडं चतुरंगुलोच्छ्रितंस्थंडिलंवाकृत्वा चतुर्द्वारयुक्तांशालांविदिकास्वध्वजादिभिः-सुसज्य यजमान आचार्यो वा वक्ष्यमाणपद्धत्या वस्तुवेद्यामीशानादि क्रमेण शिख्यादि देवानावाहयेत् । अथातो वास्तुभद्र पूजन विधिः । ३ॐसिद्धम् ३ त्रिराचम्यसंकल्पंकुर्यात्— अद्येत्यादि देशकालौ संकीर्त्यामुकोऽ हममुककर्मणि शिख्यादि वास्तु भद्रस्थदेवतानां सुवर्णरजतादि प्रतिमा स्थापन पूर्वकमीशानाद प्रादक्षिण्य क्रमेण तत्तद्देवतानामावाहनादिप्रकारेण पूजनंकरिष्ये। ततः सुवर्णे मयींनागाकृतिं वास्तुप्रतिमामान्याश्च प्रतिमास्ता म्रपात्रेसंस्थाप्याग्न्युत्तारण विधिनाऽग्न्युत्तारणं कृत्वा लिखित वास्तुभद्रानुसारेण तत्तत्स्थानेषु प्रतिमास्थापयित्वा कर्मारंभं कुर्यात्-। पंचशिलाश्च वास्तुवेद्याः परितः स्थापयेत् । तत्रादौ घाशईशान एकपदेरक्ते शिखिनम् । ३ॐ सनः पावक इत्यस्य

मेधातिथि ऋषिर्गायत्रीछन्दो ऽग्नि देवता शिख्यावाहने विनियोगः । ओ३म् सन पावक दीदिवोग्नेदेवा । २ऽ।। इहावह । उपयज्ञ ई० हविश्चन ओ३म् भूर्भुवः स्वः शिखिनेनमः स्थापयामि पूजयामि । तदग्रतः प्रादक्षिण्य क्रमेणैकपदेपर्जन्यं पीतम् ॥ ओ३म् शन्नो वात इत्यस्य दध्यंगाथर्वण ऋषिरनुष्टुप्छन्दः पर्जन्यो देवता पर्जन्य स्थापने विनियोगः ॥ ओ३म् शन्नो वातः पवताॐ शन्नस्तपतु सूर्यः शन्तः कनिक्रदद्देवः पर्जन्योऽभिवर्षतु ॥ ओ३म् भू० स्वः पर्जन्यायनमः स्था० पू० ॥ तदग्रतो जयंतं द्विपदे पीतं । ओ३म् गोत्रभिदमित्यस्याप्रतिरथ ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता जयन्तस्थापने विनियोगः ॥ ओ३म् गोत्रभिदं गोविदं वज्रबाहुं जयन्त मज्मप्रमृणं तमोजसा ॥ इम ई० सजाता ऽ अनुवीर यध्वमिन्द्र ई० सखायो ऽ अनुस ई० रभध्वम् ॥ ओ३म् भू० स्वः जयन्तायनमः जयन्तं स्था० पू० ॥ ततो द्विपदे पीतं कुलिशायुधम् ॥ ओ३म् मन्त्वा शँ॥ इत्यस्य विश्वामित्र ऋषि स्त्रिष्टुप्छन्दः इन्द्रो देवता कुलिशायुध स्थापने वि० ॥ ओ३म् मन्त्वा शँ॥ इन्द्रवृषभोरणायपिबासोम-मनुष्वधम्मदाय । आसिंचस्वजठरे मध्व ऊर्मिन्त्व ई० राजासि प्रतिपत्सुतानाम् ॥ ओ३म् भूर्भुवः स्वः कुलिशायुधायनमः स्था० पू० ॥ तदग्रे रक्तं द्विपदं सूर्यम् ॥ ओ३म् आकृष्णेनेत्यस्य हिरण्यस्तुप ऋषिस्त्रिष्टुप्छन्दः सविता देवता सूर्य स्थापने० ॥ ओ३म् आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्य येन सविता रथेन देवोयाति भुवनानि पश्यन् ॥ ओ३म् भू० स्वः—सूर्याय नमः स्था० पू० ॥ तदग्रे पदद्वये शुक्लं सत्यं ॥ ओ३म् व्रतेन दीक्षेत्यस्य प्रजापति ऋषि रनुष्टुप्छन्दः सत्यो देवता सत्य स्थापने वि० ॥ ओ३म् व्रतेन दीक्षामाप्नोति, दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धा माप्नोति श्रद्धया सत्यमाप्यते ॥ ओ३म् भू० स्वः ओ३म् सत्याय नमः स्था० पू० तदग्रे पदद्वये भृशं कृष्णं । ओ३म् भायै दार्वाहारमित्यस्य नारायण ऋषि स्त्रिष्टुप्छन्दो नारायणो देवता भृश । स्थापने विनियोगः ॥ ओ३म् भायै दार्वा-

हारं प्रभाया ऽ अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकायपेशितारं मनुष्यलोकाय प्रकरितार ॐ सर्पेभ्यो लोकेभ्य ऽ उपसेक्तारं मवऋत्यैव्वधायोपमन्थितारं मेधायव्वासः पल्पूलिं प्रकामायरजयित्रीम् ॥ ॐ भू० स्वः० भूशाय नमः स्था० पू० ॥ भूशायत एकपदे आकाशं—ॐ घृतंघृत पावानइत्यस्य प्रजापतिर्ऋषिर्यजुश्छन्दो विश्वेदेवा देवता आकाश स्थापने विनियोगः ॐ घृतंघृतपावानः पिबतवसांवसापावानः पिबतान्तरिक्षस्यहविरसि स्वाहा दिशः प्रदिशआदिशोविदिश ऽ उद्दिशोदिग्भ्यः स्वाहा ॥ ॐ भूर्भुवः स्वः आकाशायनमः आकाशं स्था० पू० तत आग्नेये एकपदे शुभ्रवर्ण वायुम् । ॐ वायोः पूतइत्यस्यामूर्ति ऋषिर्गायत्रीछन्दः सोमोदेवता वायुस्थापने विनियोगः ॐ वायोः पूतः पवित्रेण प्रत्यङ्‍ सोमो ऽ अतिद्रुतः । इन्द्रस्य युज्यः सखा ॐ भूर्भुवः स्वःवायुं स्था० पू० तत एकपदे रक्तं पूषाणम् । ॐ पूषणंवनिष्ठुना इत्यस्य प्रजापति ऋषिः पूषादेवता पूष्णः स्थापने विनियोगः ॐ पूषणं वनिष्ठुनां धाऽन्धीन्स्थूल गुदयासर्पान्गुदाभिर्विहूरुत आन्त्रैरपोवस्थिना वृषणमांडाभ्यां वाजिन ३० शेपेनप्रजा ॐ रेतसाचापान पित्तेन प्रदरान्पायुनाकूष्माण्डाञ्छकपिण्डैः ॐ भू० स्व० पूषाणं स्था० पू० ततो द्विपदेशुक्लं वितथम् ॐ विभयदीत्यस्य कुशिक ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता वितथ स्थापने विनियोगः ॐ विदयदी सरमारुग्णमद्रे र्महिपाथः पूर्व्यं ३० सध्र्यक्‍ः अग्रंनयत्सु पद्यराणाम धारवं प्रथमा जानतीगात् ॥ ॐ भू० स्वः वि० स्था० पू० ॥११॥ ततः पदद्वये पीतं गृहक्षतम ॥ ॐ गृहमाइत्यस्य शंकु ऋषि स्त्रिष्टुप्छन्दः वास्तुर्देवता गृहक्षत स्थापने वि० ॥ ॐ गृहामा बिभीतमा वेपध्वमूर्ज बिभ्रत ऽ एमसि । ऊर्ज विभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ ॐ भू० स्वः । गृह क्षतायनमः स्था० पू० ॥ ततो दक्षिणे पदद्वये कृष्णं यमम् ॥ ॐ यमायेत्यस्य दध्यंगाथर्वण ऋषिस्त्रिस्त्रियजूंषि आयस्य यम

नामा वातोदेवता अन्त्ययोर्घर्मोदेवता यमस्थापने वि० । ॐ यमा यत्वांगिरस्वते पितृमतेस्वाहा । घर्मायस्वाहा । घर्मः पित्रे ॥ ॐ भू० स्वः यमायनमः स्था० पूजयामि । ततो रक्तवर्णपदद्वयेगन्धर्वम् । ॐ गन्धर्वस्त्वेत्यस्य परमेष्ठीऋषिर्यजुश्छन्दःपरिधयोदेवता गन्धर्वस्थापने विनियोगः । ॐ गन्धर्वस्त्वाविश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्यपरिधिरस्यग्निरिडईडितः ॐ भू० स्वः ॐ गन्धर्वाय० स्था० पू० । ततोभृङ्गराजंद्विपदंकृष्णम् ॥ ॐ सोम ई० राजानमितितापसऋषिरनुष्टुपछन्दः सोमाग्न्यादिदेवता भृङ्गराजस्थापने विनियोगः ॥ ॐ सोम ई० राजानमवसेग्निमन्वारभामहे । आदित्यान्विष्णु ई० सूर्यंब्रह्माणंचबृहस्पति ॐ स्वाहा ॐ भू० स्वः भृङ्गराजायनमः स्था० पू० ततएकपदे पीतंमृगम् । ॐ मृगोनभीमइत्यस्यजयर्षिः त्रिष्टुप्छन्दः इन्द्रोदेवतामृगस्थापने विनियोगः । ॐ मृगोनभीमः कुचरोगिरिष्ठाः परावतआजगंथा परस्याः । सृक ई० स ई० शायपविमिन्द्रतिग्मं विशत्रूंताढिवि-मृधोनुदस्व ॥ ॐ भू० स्व० मृगायनमःस्था० पूजयामि । ततोनैर्ऋत्यएकपदेरक्तान्पितृन् । ॐ पितृभ्यइत्यस्यप्रजापतिर्ऋषिःसप्तयजूंपिछंदांसिपितरोदेवतापितृस्थापनेविनियोगः । ॐपितृभ्यःस्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन्नपितरो मीमदन्तपितरोतीतृपन्त: पितरः पितरःशुन्धध्वम् ॥ ॐ भू० स्वः पितृभ्योनमः स्था० पू० ॥ ततएकपदेरक्तंदौवारिकम् । ॐ द्वेविरूपेतिमन्त्रस्य कुत्सऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता दौवारिकस्थापने विनि० । ॐ द्वेविरूपेचरतः स्वर्थे ऽ न्यान्यावत्समुपधापयेते । हरिरन्यस्यां भवतिस्वधावांश्छुक्रो ऽ अन्यस्यांददृशेसुवर्चाः ॥ ॐ भूर्भुवः स्वः दौवारिकायनमः स्था० पू० । ततो द्विपदेशुक्लंसुग्रीवम् । ॐ तन्नोवातमित्यस्य गौतमऋषिर्जगतीछन्दः विश्वेदेवादेवताः सुग्रीवस्थापने विनियोगः । ॐ तन्नोवातोमयोभुवातुभेषजं तन्मातापृथिवी तत्पिताद्यौस्तद्ग्रावाणः सोमसुतोमयोभुवस्तद-

रिचनाश्रृणुनं भिष्णगायुधम ॥ ३० भूर्भुवः स्वः मुर्श्यायनमः स्था० पू० ततःग्नेक्षिपदेरक्तंपुष्पदन्तम ३० नमः पार्यायेत्यस्य परमेष्ठीऋषि र्यजुंषिछन्दांसिरुद्रादेवतापुष्पदन्त स्थापने विनियोगः । ३० नमः पार्यायचावार्यायच नमः प्रतरणायचोत्तरणाय च नमस्तीर्थ्याय च कूल्यायच नमः शष्पायच फेन्यायच ॥ ३ॐ भूर्भुवः स्वः पुष्पदन्तायनमः स्था० पू० । ततः पश्चिमे श्वेतं द्विपदेवरुणम् । ३० इमम्मेनिशुनः शेफऋषिर्गायत्रीछन्दो वरुणोदेवता वरुणस्थापने विनियोगः । ३० इमम्मे वरुणश्रुधीहवमद्या च मृडय । त्वाम वस्युराचके । ३ॐ भू० स्वः वरुणायनमः स्था० पू० । ततो द्विपदे पीतमसुरम् । ३० येरूपाणि—इत्यस्य प्रजापतिर्ऋषि त्रिष्टुप्छन्दः अग्निर्देवताऽसुरस्थापने वि० ३० येरूपाणिप्रतिमुञ्चमानाऽअसुराःसन्तः स्वधयाचरन्ति । परापुरोनिपुरोये भरन्त्यग्निष्टां ल्लोकात्प्रणुदात्यस्मात् । ३० भूर्भुवःस्वःअसुरायनमः स्था० पू० । ततो द्विपदेकृष्णंशोषम । ३० नमोस्तुसर्पेभ्यइत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः सर्पादेवताः शोषस्थापने विनियोगः । ३ॐ नमोस्तु सर्पेभ्योयेकेचपृथिवीमनु । ये ऽ अन्तरिक्षेदिवितेभ्यः सर्पेभ्योनमः ३०भू० स्वः शोषायनमः स्था० पू० । तत एकपदेपीतंपापम् ॥ ३० मामेर्माइत्यस्य प्रजापतिर्ऋषिर्यजुश्छन्दः पापोदेवतापापस्थापने विनियोगः । ३ॐ माभेर्मासम्विक्था ऽ ऊर्जधत्स्वधिषणेव्वीड्वी सतीव्वीडयेथा मूर्जंदधाथाम् ॥ पाप्माहतोनसोमः ३ॐ भू० स्वः पापायनमः स्था० पू० ततोवायव्येएकपदे रक्तंरोगम् । परंमृत्यो रितस्यसङ्कल्पऋषिस्त्रिष्टुप्छन्दःमृत्युर्देवतारोगस्थापने विनियोगः ३० परं मृत्योऽअनुपरेहिपन्थाम्यस्ते ऽ अन्य ऽ इतरो देवयानात । चक्षुष्मतेश्रृण्वते त्र्वीमिमानः प्रजा ॐ रीरिषोमोतव्वीरान् ॥ ३ॐ भूर्भुवः स्वः । रोगायनमः स्था० पू० । तत एकपदेरक्तमहिम् । ३ॐ अहिरिव भोगेरित्यस्य प्रजापतिर्ऋषि त्रिष्टुप्छन्दः हस्तघ्नो देवता अहिस्थापने विनियोगः ॥ ३० आहरिव भोगैः पर्य्येतिवा हुंज्यायाहेति परिवाधमानः ॥ हस्तघ्नो विश्वाव्वयुनानि विद्वा

ग्पुमान्पुमा ॐ संपरिपालुविश्वतः ॥ ॐ भूर्भुवः स्वः अह्ये नमः स्था० पू० तनो द्विपदे मुग्च्यं रक्तं—ॐ मुग्न इ० सदस्य इत्यस्य प्रजापत्यश्वि सरस्वत्य ऋपयोजगतीछन्दः अश्विसरस्वतीन्द्रा देवता मुख्य स्था० वि० ॥ ॐ मुग्व इ० सदस्य शिर ऽ इत्सतेन जिह्वा पवित्र मश्विनासनसरस्वती । चप्पनपायु भिपगस्य त्वा-लोवस्तिनं शेपो हरसातरस्वी । ॐ भूर्भुवः स्वः मुख्यायनमः । स्था० पू० । ततःपदद्वये कृष्णं भल्लाटम् । ॐ भद्रं कर्णेभिरित्यस्य गौतम ऋपिस्त्रिष्टुप्छन्दः विश्वेदेवा देवताभल्लाट स्था० वि० ॥ ॐ भद्रं कर्णेभिःशृणुयामदेवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरै रंगैस्तुष्टुवा ॐ सस्तनूभिर्व्यसे महिदेवहितं यदायुः ॥ ॐ भूर्भुवः स्वः भल्लाटायनमः स्था० पू०। ततो द्विपदेशुक्लंसोमसुत्तरे। ॐ वय इ० सोमेत्यस्य वन्धु ऋपिर्गायत्रीछन्दः सोमोदेवता सोम स्थापने वि० ॥ ॐ वय इ० सोमव्रतेतवमन स्तनूपु विभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ॐ भू० स्वः सोमायनमः । स्था० पू० ततो द्विपदे कृष्णं सर्पम् । ॐ येवामीत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः सर्पादेवता सर्पस्था० वि० । ॐ येवामीरोचने दिवोयेवा सूर्य्यस्य रश्मिपु । येपामप्सुसदस्कृतं तेभ्यः सर्पेभ्योनमः । ॐ भूर्भुवःस्वः सर्पायनमः स्था० पू० ॥ ततः पदद्वये पीतामदितिम् ॥ ॐ अदिति र्द्यौरित्यस्य गौतम ऋपिस्त्रिष्टुप्छन्दः विश्वेदेवाधिदेवता अदिति स्थापनेवि० ॥ ॐ अदितिर्द्यौरदितिरन्तरिक्ष मदितिर्मातासपिता सपुत्रः । विश्वेदेवा ऽ अदितिः पंचजना ऽ अदितिर्जात मदिति र्ज्जनित्वम् ॥ ॐ भू० स्वः अदित्यैनमः स्था० पू० ॥ तत एकपदे पीतवर्णादितिम् ॥ ॐ कायस्वाहेत्यस्य प्रजापतिर्ऋपिर्दैवीबृहत्या दिछन्दांसि लिंगोक्ता देवताऽदितिस्थापने वि० ॥ ॐ कायस्वाहा कस्मैस्वाहा कतमस्मैस्वाहा स्वाहाधिमाधीताय स्वाहा मनःप्रजा पतये स्वाहा चित्तंविज्ञानायादित्यै स्वाहा दित्यैमहै स्वाहा दित्यै सुमृडीकायै स्वाहा सरस्वत्यैस्वाहा सरस्वत्यैपावकायै स्वाहा सर-स्वत्यै बृहत्यै स्वाहा पूष्णेस्वाहा प्रपथ्यायस्वाहा पूष्णेनरंधिषाय

स्वाहा त्वष्ट्रेस्वाहा त्वष्ट्रेतुरीपाय स्वाहा त्वष्ट्रेपुरूरूपाय स्वाहा विष्णवेस्वाहा विष्णवेधिभृपायस्वाहा विष्णवेशिपिविष्टायस्वाहा ॐ भू० स्वः दित्यैनमः स्था० पू० ॥ इति बाह्यपरिधौष्ठाशत्रिदेवतास्थापनक्रमः ॥ अथान्तरीशानादिचतुर्षु विदिक्षु अवादि देवता स्थापनक्रमः ॥ ततो बाह्यपरिधौ ईशानाभ्यन्तरे कपदे श्वेता अपः ॥ ॐ अपोअस्मानित्यस्य प्रजापति र्ऋषिरत्यष्टीछन्दः आपो देवता अपांस्थापने विनियोगः । ॐ आपो अस्मान् मातरः शुंधयन्तुघृतेननोघृतप्वः पुनन्तु । ॐ विश्व ँ० हिरिप्रंप्रवहन्तीदेवी रुदिदाभ्यः शुचिराप्न ऽ एमि ॥ ॐ भूर्भुवःस्वः अद्भ्योनमःस्था० पू० ॥ तत आग्नेय आभ्यन्तरेकपदे शुक्लं सावित्रं ॥ ॐ वरमहा नित्यस्य जमदग्निर्ऋषिर्बृहतीछन्दः सविताऽदेवता सावितृस्थापने वि० ॥ ॐ वरमहा ँ२॥ असिसूर्य्यबटादित्यमहा ँ॥ असिमहस्ते सतोमहिमा पनस्यतेद्धादेवमहां असि ॥ ॐ भू० स्वः सवित्रेनमः स्था० पू० ॥ ततो नैर्ऋत्य आभ्यन्तरीयैकपदेशुक्लं जयन्तम् ॥ ॐ गोत्रभिद मित्यस्याप्रतिरथऋषिस्त्रिष्टुप्छन्दः इन्द्रोदेवताजयन्तावाहने विनियोगः ॥ ॐ गोत्रभिदं गोविदं वज्रबाहुंजयन्तमज्म प्रमृणं तमोजसा । इम ँ० सजाता ऽ अनुवीरयध्व मिन्द्र ँ० सखायो ऽ अनुस ँ० रभध्वम् ॥ ॐ भू० स्वः जयन्ताय नमः स्था० पू० । ततो वायव्ये आभ्यन्तरीयेकपदे शुक्लंरुद्रं ॐ यातेरुद्रेत्यस्य परमेष्ठी ऋषिरनुष्टुप्छन्दः रुद्रोदेवता रुद्रावाहने विनियोगः ॐ यातेरुद्रशिवातनू रघोरापापकाशिनी । तयानस्तन्वा शंतमया गिरिशन्ताभि चाकशीहि ॥ ॐ भू० स्वः रुद्रायनमः स्था० पू० ॥३३॥ ततः पूर्वपदत्रये कृष्णमर्यमणम् । ॐ अर्यमणमित्यस्य तापसऋषि रनुष्टुप्छन्दः अर्यमादेवता अर्यमस्थापने वि० ॐ अर्यमणं बृहस्पति मिन्द्रंदानाय चोदयव्वाचं विष्णु ँ० सरस्वती ँ सवितारंचव्वाजिन ँ स्वाहा । ॐ भू० स्वः अर्यम्णेनमः स्था० पू० ॥ तत आग्नेयेएकपदेरक्तं सवितारम् । ॐ सवितात्वेत्यस्य वरुण ऋषि रतिजगतीछन्दः

यजमानोदेवता सवितुः स्थापने वि० ॐ सवितात्वासवानाॐ सुवतामग्नि र्गृहपतीना ॐ सोमोव्वनस्पतीनाम् । बृहस्पति र्वाचमिन्द्रो ज्येष्ठ्यायरुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्म्म-पतीनाम् ॥ ॐ भू० स्वः सवित्रेनमः स्था० पू० ॥ ततोदक्षिणे पदत्रये शुक्लं विवस्वन्तम् ॥ ॐ विवस्वन्नित्यस्य प्रजापति र्ऋषि जगती छन्दः आशीर्देवता विवस्वत्स्थापने विनियोगः । ॐ विवस्वन्नादित्यैपते सोमपीथस्तस्मिन्वत्स । श्रदस्मैनरोवचसे नधालन यदाशीर्दादंपती व्वाममश्नुतः ॥ ॐभू० स्वः विवस्तेनमः स्था० पू० ॥ ततो नैर्ऋत्यैकपदे रक्तं विबुधाधिपम् । ॐ उदित्य मित्यस्य प्रस्कण्व ऋषिः सौरी गायत्री छन्दः सविता देवता विबुधाधिप स्था० वि० ॥ ॐ उदुत्यं जातवेदसं देवं वहन्तिकेतवः दृशेविश्वायसूर्यम् । ॐ भू० स्वः विबुधाधिपाय नमः स्था० पू०॥ ततः पश्चिमे पदत्रयेशुक्लवर्णमित्रम् । ॐ नमो मित्रस्येत्यस्य सूर्य ऋषिः सौरी जगती छन्दः मित्रो देवता मित्र स्था० वि०॥ ॐ नमो मित्रस्य व्वरुणस्य चक्षसे महोदेवायतदृतꣳ सपर्यत । दूरेदृशेदेव जाताय केतवे दिवस्पुत्राय सूर्यायशꣳ शत ॥ ॐ भू० स्व० मित्रायानमः ॥ स्था० पू० । ततो वायव्यैकपदे रक्तं राजय-क्ष्माणम् । ॐ साकंयक्ष्मेत्यस्याथर्वणोभिषगृषिरनुष्टुप्छन्दः औषधिर्देवता राजयक्ष्मणः स्थापने वि० । ॐ साकंयक्ष्म प्रपत-चाषेण किकिदीविना । साकं व्वातस्यध्राज्या साकं नश्यनिहाकया । ॐ भू०स्वः राजयक्ष्मणे नमः । तत उत्तरे त्रिपदे रक्तं पृथ्वीधरम् । ॐ पृथिवी देवयजनीत्यस्य परमेष्ठी ऋषि र्यजुश्छन्दः सविता-देवता पृथ्वीधर स्थापने वि० । ॐ पृथिवीदेवयजन्योषध्या स्ते-मूलं माहिꣳ सिषंव्रजंगच्छगोष्ठानं व्वर्षतु तेद्यौर्बधानदेव सवि-तः परमस्यां पृथिव्या ॐ शतेन पाशैर्योस्मान् द्वेष्टियं चवयं द्वि-ष्मस्तमतो मामौक ॥ ॐ भू० स्वः पृथ्वीधरायनमः स्था० पू० । तत ईशान एकपदे शुक्ल मापवत्सम् ॥ ॐ आपतये त्वेत्यस्य प्रजापतिर्ऋषि र्यजुश्छन्दः वायुर्देवता आपवत्सस्थापने विनियोगः

ॐ आपतयेत्वा परिपतयेगृह्णामि तनूनप्त्रे शाक्कराय शक्कनऽ ओजिष्ठाय । अनाधृष्ट मस्यना धृष्यंदेवाना मोजोनभि शस्त्य-भिरास्तिपाऽअनभिशस्ते न्यमंजसा सत्यमुपगेप ॐ स्थितेमाधाः। ॐ भू० स्वः आपवत्सायनमः स्था० पू० ॥ ४४ ॥ ततो मध्येवेद्यां नवपदेहृदये ब्रह्माणं पीतवर्णमावाहयेत् ॥ ॐ ब्रह्मजज्ञानमिति गौतम ऋषि स्त्रिष्टुप्छन्दो ब्रह्मादेवनाब्रह्म स्थापने वि० ॐ ब्रह्म-जज्ञानं प्रथमं पुरस्ता द्विसीमतः सुरुचोव्वेन आवः सबुध्न्याऽ उपमाऽअस्यविष्टाः सतश्चयोनिमसतश्चविवः। ॐ भू० स्वः—ब्रह्मणेनमः स्था० पू० । भोब्रह्मन् सु० व० । ततस्तस्मिन्नेवपदे तदुत्तरतः स्त्रीरूपां पृथिवीम् ॥ ॐ स्योनापृथ्वीति मेधातिथि ऋषिर्गायत्री छन्दः पृथ्वीदेवता पृथ्वीस्थापने विनियोगः। ॐ स्योनापृथिवी नो भवा नृक्षरानिवेशनी। यच्छानः शर्मसप्रथाः॥ ॐ भू० स्वः पृथिव्यैनमः स्था० पू० ॥ ततस्तस्मिन्नेव तदुत्तरतो सुवर्णप्रतिमायां वृषवास्तुं सर्पाकारं विलिख्यस्थापयेत् ॥ आवा-हनम्—आवाहयाम्यहंवास्तुं वृषरूपधरं शुभम् । नागाकृति गृहेशं-त्वं पूजार्थमत्रमण्डले ॥ ॐ वास्तोष्पत इतिवषिष्ठ ऋषिस्त्रिष्टु-प्छन्दो वास्तुर्देवता वास्तुस्थापने विनियोगः॥ ॐ वास्तोष्पते प्रतिजानिह्यस्मान्स्वावेशोऽअनमीवोभवानः ॥ यत्त्वेमहे प्रतितन्नो जुषस्वशन्नो भवद्विपदेशं चतुष्पदे ॥ ॐ भू० स्वः वास्तवेनमः स्था० पू० । भोवास्तो सु० व०॥ ततो वास्तु मंडप संलग्नेऽष्टदल कमले चरक्यादिवाह्यदेवतानामीशानादिषु स्थापन क्रमः। ततः ईशानकोणे धूम्रवर्णां चरकीम् ॥ ॐ यन्ते देवीति मधुरच्छन्द ऋषिः पंक्तिश्छन्दः चरकीदेवता चरकीस्थापने वि०। मन्त्र— ॐ यन्ते देवि निर्ऋति राबबन्धपाशंग्रीवा स्व विचृत्यम्। तन्ते विष्याम्यायुषो नमध्यादथैनं पितुमद्धिप्रसूत नमोभूत्यैयेदंचकार ॐ भूस्वः चरक्यैनमःस्था०पू० आग्नेयेततोविदारीम् कृष्णांपिंगलाम् ॐ अजराजायेति नारायण ऋषिः प्रकृतिश्छन्दो विदारीदेवता विदारीस्थापने विनियोगः॥ ॐ अजराजाय किनव कृनाया

दिनचदर्श त्रेनार्यकल्पिनं द्वापरायाधिकल्पिन मास्कन्दाय सभा स्थाणुं मृत्यवे गोव्यच्छमंतकाय गोघातं चुधेयोगां विकृन्तंभिच माणउपनिष्टनि दुष्कृतायचरका चार्य्यं पाप्मने शैलगम् ॥ ॐ भू० स्वः विदार्यैनमः स्था० पूजयामि । ततोनैर्ऋत्ये पीतवर्णां पूतनाम् । ॐ कटुप्रियायेति आत्रेयऋषिर्जगतीछन्दः पूतनादेवता पूतनास्थापने वि० । ॐ कटुप्रियाय धाम्नेमनामहे स्वक्षत्रायस्वय शसे महेवयम् । आमेन्यस्यरजसोयदभ्रआँ ॥ अपोवृणानावितनोतिमायिनी । ॐ भू० स्वः पूतनायैनमः स्था० पू० । ततोवायव्येकृष्णांपापराक्षसीम् । ॐ यस्यास्तइतिमधुश्छन्द ऋषिस्त्रिष्टुप्छन्दः पापराक्षसीदेवता पापराक्षसीस्थापने वि० । ॐ यस्यस्ते घोरआसंजुहोम्येपां वन्धनामवसर्जनाय यांत्वाजनोभूमिरितिप्रम दन्ते निर्ऋतिंत्वाहं परिवेदविश्वतः ॥ ॐ भू० स्वः पापराक्षस्यै नमः स्था० पू० ततः पूर्वादिदिक्षु । पूर्वेस्कन्दंरक्तम् । ॐ यदक्रन्दे त्यस्यदीर्घतमाऋषि स्त्रिष्टुप्छन्दः स्कन्दोदेवता स्कन्दस्थापने वि० ॐ यदक्रन्दः प्रथमं जायमानउद्यन्त्समुद्रा दुतवापुरीपात । शेनस्यपक्षा हरिणस्यबाहू ऽ उपस्तुत्यंमहिजातन्ते ऽ अर्व्वन् ॥ ॐ भू० स्वः ॐ स्कन्दायनमः स्था० पू० । ततोदक्षिणे ऽ र्यमणम् कृष्णम् ॥ ॐ अर्यमणमित्यस्य तापसऋषिस्त्रिष्टुप्छन्दो ऽ र्यमा देवताअर्यमणःस्थापने वि०ॐ अर्यमणंबृहस्पतिमिन्द्रंदानायचोदय व्वाचं विष्णु ं० सरस्वती ॐ सवितारंच वाजिन ॐ स्वाहा ॐ भू० स्व० अर्यम्णेनमः स्था० पू० ततःपश्चिमेजृम्भकम् रक्तम् ॐ येरूपाणि—इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छंदो ऽ ग्निर्देवता जृम्भक स्थापने वि० । ॐ ये रूपाणि प्रतिमुंचमाना ऽ असुराः सन्तः स्वधयाचरन्ति । परापुरो निपुरोये भरन्त्यग्निष्टांल्लोका त्प्रणुदात्यस्मात् ॥ ॐ भू० स्वः जृम्भकायनमः, स्था० पू० ततो चाह्योत्तरे पीतंपिलिपिन्सम् ॥ ॐ नतं विदाथइत्यस्य विश्वकर्मा भौवनऋषिःत्रि० विश्वकर्मादेवता पिलिपिन्स स्थापने वि० । ॐ नतं विदाथय ऽ इमाजनानान्यद्युष्माकमन्तरं वभूव । नीहारेण

प्रावृताजल्प्या चासुतृप उक्थशाशश्चरन्ति ॥ ॐ भू० स्व: पिलिपित्सायनमः स्था० पू० ॥ ततोवेदिसंलग्न कमलाग्रभागे पूर्वादिदिक्षु नाममंत्रैरष्टदिक्पालान स्थापयेत् ॥ पूर्वकमलाग्रभागे इन्द्रम् । ॐ इन्द्रायनमः इन्द्रंस्थापयामि पूजयामि । आग्नेयकोकोणे ऽग्निम् ॥ ॐअग्नयेनमः । अग्निं स्था० पू० । ततो दक्षिणे-यमम् ॥ ॐ यमायनमः । यमं स्था० पू० ततो नैर्ऋतिकोणे निर्ऋतिम् । ॐ निर्ऋतयेनमनिर्ऋतिंस्था०पू० । ततःपश्चिमेवरुणम । ॐ वरुणायनमः । वरुणंस्था० पू० ततो वायव्ये वायुम् । ॐ वायवेनमः । वायुं स्था० पू० तत उत्तरे कुवेरम् । ॐ कुवेरायनमः । कुवेरं स्था० पू० तत ईशानेईशं ॐ ईशानाय नमः । ईशं स्था० पू० । तत उर्ध्वम् । ॐ ब्रह्मणे नमः । ब्रह्माणं स्था० पू० । ततोऽधः । ॐ अनन्तायनमः । अनन्तं स्था० पू० । इतिवास्तु भद्रस्थ देवता स्थापन क्रमः ॥ अथवास्तु भद्रसंघ पूजा पद्धतिः

आवाहनम्-ब्रह्मादीं ल्लोकपालान्तान्वास्तुभद्रप्रतिष्ठितान् । देवाश्चावाहयामीहसङ्घपूजन कर्मणि । अर्घ्यम् ॥ गङ्गाजलं परंदिव्यं ताम्रपात्रस्थमुत्तमम् । देवागृह्णन्तुसौख्याय प्रतिष्ठावास्तुकर्मणि ॥ आसनम्—सर्वरङ्गविचित्राढ्य मासनंदिव्यमुत्तमम् । देवागृह्णन्तु सौख्याय संस्थितावास्तुमण्डले । तत्रप्राणप्रतिष्ठाम् । ॐ एतन्तेदेव सवितर्यज्ञंप्राहुर्बृहस्पतये ब्रह्मणेतेनयज्ञमवतेनयज्ञ पतिंतेनमामव । ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमंतनोत्वरिष्टं यज्ञ ँ᳭ समिमंदधातु विश्वेदेवासऽइहमादयन्तामाप्रतिष्ठ ॐ भूर्भुवःस्वःब्रह्मादिलोकपालान्तदेवताविग्रहसांगप्रतिष्ठावास्तोइहतिष्ठेह सु०वरदोभव । इतिप्राणप्रतिष्ठांकृत्वा—पंचामृतम् । दधिदुग्धघृतक्षौद्रशर्करा मिश्रितंपरम् । देवा गृह्णन्तु सौख्याय वास्तुमंडप संस्थिताः स्नानीयम्–पविशंतीर्थजंदिव्यं स्नानीयं मंगलप्रदम् । देवा गृह्णन्तु सौख्याय प्रतिष्ठा वास्तुमंडले । यज्ञोपवीतम् नवतन्तु समायुक्तामुपवीतांश्चपीनकान् देवागृह्णन्तुसौख्यायसंस्थितावास्तु मंडले वस्त्रम् वस्त्रसंघंसमानीतं नानावर्णात्मकंपरम् देवा गृह्णन्तु

सौख्याय वास्तुमंडलसंस्थिताः । चन्दनम् । भालशोभाकरंदिव्यं चन्दनं सुमनोहरम् । देवा गृह्णन्तु सौख्याय प्रतिष्ठावास्तुमंडले । अक्षताः । शुद्धमुक्ताफलाभांस्ता अक्षतां चन्द्रशिसंन्निभान् । देवा गृह्णन्तु सौख्याय वास्तु मंडल संस्थिताः । पुष्पाणि—जातीचम्पक पुष्पाणिदूर्वापत्रादिकानिच । देवा गृह्णन्तु सौख्याय वास्तु मंडल संस्थिताः । धूपम्—धूपं नागरकंदिव्यं गुग्गुलेन समन्वितम् देवागृह्णन्तु सौख्यायवास्तुपूजाविधौमुदा । आरातिक्यम्—गवाज्यं वर्त्तिसंदीप्त मारातिक्यं सुमंगलम् । देवाः पश्यन्तु सौख्याय वास्तुपूजनकर्मणि । नैवेद्यम्—अन्नं चतुर्विधंदिव्यं घृतमिष्ठान्न संयुतम् । देवागृह्णन्तुसौख्याय संस्थितावास्तुमंडले । नैवेद्यान्तेजलम् नैवेद्यान्तेजलंचैव करानन्नविशुद्धिदम् । देवागृह्णन्तु सौख्यार्थं तिष्ठंतो वास्तुभद्रके । उपायनम्—हिरण्यंराजतंद्रव्य मुपायननिमित्तकम् । देवा गृह्णन्तु सौख्याय वास्तुपूजनकर्मणि । क्षमापनम्—विधि हीनंद्रव्यहीनं श्रद्धाहीनंच यद्भवेत् । देवाः क्षाम्यन्तु तत्सर्वं संस्थिता वास्तुमंडले । इति संघपूजनम्—ततः प्रदक्षिणा चतुष्टयंकुर्यात् । यानिकानीत्यादिना । मन्त्रपुष्पांजलिः । ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रेराजन्यः शूर ऽ इषव्योतिव्याधी महारथो जायतांदोग्ध्रीधेनु र्वोढानड्वानाशुःसप्तिः पुरंधिर्योषा जिष्णू रथेष्ठाः सभेयोयुवास्य यजमानस्य वीरोजायतां निकामे निकामेनः पर्जन्यो वर्षतु फलवत्योन ऽ औषधयः पच्यन्तां योगक्षेमोनः कल्पन्ताम् । ततो ऽष्टदलकमलाद्बहि उत्तरस्यांदिशि त्रिशूलचिन्हं कृत्वा तस्मिन् क्षेत्रपालं पूजयेत् । आ०— ॐ—नमोभगवते क्षेत्रपालाय सर्वदेवताधिनिर्जिताय भास्वद्भासुर किंकिणीज्वालामुखाय भैरवरूपाय । ह्रीं क्षौं मुरु २ तुरु २ लल पप ह्रूँह्रूँ फंफंकाररूपायह्रूँफट् क्षेत्रपाल इहागच्छेहतिष्ठ पूजांगृहाण ॐ क्षत्रस्ययोनिरसि क्षत्रस्य नाभिरसि मात्वाहिं ०० सीन्मामाहिं ०० सीः ॥ इतिपाद्यादिभिः सम्पूज्यततोवास्तुवेद्यां वास्तु पदेनाग्रकलशं पूर्वोक्तानां पंचानांकलशानांमध्ये एकंपंचरत्न तीर्थ-

जल तीर्थमृत्तिकादि सर्वौषधियुतंस्थापयेत् । तत्रैववास्तुप्रतिमां पंचपल्लवसहितां स्थापयेत् । एवंविधिनाचतुर्ष्कोणेषु स्थापित नन्दादिशिलासन्निधिषुचतुरःकलशांस्थापयेत् । तेनैव विधिनावनमालादिपंचपल्लवसंलग्नां गृहवर्गायुतांत्रिसूत्रींचाभिमन्त्र्यतत्रैव स्थापयेत ॥

## ॥ अथ गृहवास्तु होमः ॥

अथगृहवास्तुहोमः—ततः सर्वेपूर्वोक्ताआचार्या होम वेदी वा कुण्डसन्निधिमागत्य शिलानामभिषेकार्थं संस्रवधारणार्थं जलकुम्भमग्नेरुत्तरतो यथा विधिकलशपूजाविधिना सम्पूज्य स्थापयेत् । सकलाचार्योयजमानो वा कुशकण्डिकाविधानेन प्रजा पतिमग्निंवा वरदनामानं संस्थाप्यसम्पूज्यच ( वास्तुयागेप्रजापतिः ) ततो यजमानोद्रव्यदेवता भिध्यानंकृत्वा द्रव्यत्यागं कुर्यात् ॥ सङ्कल्पः । ॐ अद्येत्यादिसंकीर्त्यामुको ऽहंवाममयजमानस्यनूतनग्रहेवा देवालयेगृहप्रवेशनिमित्तकमूर्ति स्थापनकर्मणि शिलान्यासविधानपूर्वक वास्तुस्थापनकर्मणः साङ्गफलावाप्तये ग्रहयागमखेनयक्ष्ये ॥ तत्रप्रजापत्यादीनाज्येन जुहुयात् ॥ आदित्यादिग्रहान् साधिदेवप्रत्यधिदेवसहितान् ग्रहयागहोमरीत्या ग्रहयागाचार्योजुहुयात् ॥ सर्वतोभद्राचार्यः सर्वतोभद्रदैवतान्यद्यत्युक्तप्रकारेणजुहुयात् ॥ इदानींप्रतिष्ठांगत्वाद्वास्तुयागविधिं यथोक्तविधिनावक्ष्ये ॥ ततो वास्तुकाचार्यः यजमानोवासङ्कल्पं कुर्यात् ॥ अद्येत्यादिसंकीर्त्यसशिलान्यासगृहप्रवेशदेवालय प्रतिष्ठामूर्तिस्थापनादि वास्तुस्थापनकर्मणि प्रजापत्यादीनाज्येनादित्यादिग्रहान्समिद्भिः प्रत्येकमष्टाहुतिभिः । अधिदेवता प्रत्यधिदेवता श्चचतुः संख्याहुतिभिर्विनायकादीनिंद्रादींश्च द्विसंख्याहुतिभिः शिख्यादीन् पञ्चचत्वारिंशद्देवान् शर्करामधुघृताक्त समिदोदुम्बर

